# द्वितीयोऽध्यायः

## राजनीति

राजनीतिनिपुणस्य राज्ञः प्रथमं लक्षणमाह—

शास्त्राय गुणसम्पदः शास्त्रं विनयवृत्तये ।
विद्याविनीतो नृपतिः सतां भवति सम्मतः ॥ १ ॥

मेधावी मतिमानदीनवदनो दक्षः क्षमावान् ऋजु-
र्धर्मात्माऽव्यसनः पृथक् लघुकरः षाड्गुण्यविच्छक्तिमान् ।
उत्साही परराष्ट्रवित् कृतधृतिर्वृद्धिक्षयस्थानवित्
शूरो न व्यसनी स्मरत्युपकृतं वृद्धोपसेवी च यः ॥ २ ॥

बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः ।
चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥ ३ ॥

वाग्मी प्रगल्भ्य (ल्भ) प्र(स्मृ)तिमानुदग्रो बलवान् वशी ।
नेता दण्डस्य निपुणः कृतशिल्पः सुविग्रहः ॥ ४ ॥

पराभियोगप्रसहो दृष्टसर्वप्रतिक्रियः ।
परच्छिद्रानुपश्यी च सन्धिविग्रहतत्त्ववित् ॥ ५ ॥

गूढमन्त्रप्रचारश्च देशकालविभागवित् ।
आदाता सम्यगर्थानां विनियोक्ता च पार्थिवः ॥ ६ ॥

कामक्रोधभयद्रोहस्तम्भचापल्यवर्जितः ।
वृद्धोपदेशसम्पन्नः शक्तो मधुरदर्शनः ॥
निर्वृतः पितरीवाहतः यत्र लोकः स पार्थिवः ॥ ७ ॥

आत्मसम्पन्नगुणं सम्यक्प्रयुक्तं युक्तकारिणम् ।
पर्जन्यमिव राजानं प्राप्य लोकोऽभिवर्धते ॥ ८ ॥

साधु भूतलेऽस्य दुरापमकृतात्मभि ।
आत्मसंस्कारसम्पन्नो राजा भवितुमर्हति ॥ ९ ॥

लोकाधारा श्रियो राज्ञा दुरापा दुष्परिग्रहा ।
तिष्ठन्त्याप इवाधारे चिरमात्मनि संस्कृत ॥ १० ॥

कुल सत्त्व वय शौर्य दाक्षिण्य क्षिप्रकारिता ।
अविसंवादिता सत्य वृद्धसेवा कृतज्ञता ॥ ११ ॥

दैवसम्पन्नताबुद्धिरक्षुद्रपरिवारता ।
शक्यसामन्तता चैव तथा च दृढभक्तिता ॥ १२ ॥

दीर्घदर्शित्वमुत्साह शुचिता स्थूललक्षिता ।
विनीतता धार्मिकता गुणा साध्याभिगामिन ॥ १३ ॥

प्रणीतैरुपेत स मुख्यकमभिगम्यते ।
तथा च कथात यथा स्वकुलाकाभिगम्यताम् ॥ १४ ॥

अथाथ विष्णुधर्मोत्तर मुज( नृप )लक्षणम् —

सर्वलक्षणलक्षण्यो विनीत प्रियदर्शन ।
अदीर्घमन्त्रा समा सा जितकामा जितेन्द्रिय ॥ १५ ॥

ब्रह्मण्यश्चाविसंवादी दृढभक्ति प्रियंवद ।
अलोलुप सत्यवाग्गम्भीर प्रियदर्शन ॥ १६ ॥

नातितृष्णो न निर्घृणश्चारम्भरसिज्ञम
व्यवहारे सम प्राप्त पुत्रेण रिपुणा सह ॥ १७ ॥

रथे गज च धनुषि व्यायाम च कृतश्रम ।
उपवासतप शीलो यज्ञयाजी गुरुप्रिय ॥ १८ ॥

मन्त्रिमात्रपराधीन समरश्रनिवर्तक ।
पूज्य पूजयिता नित्य दण्ड्य दण्डयिता तथा ॥ १९ ॥

षाड्गुण्यस्य प्रयोक्ता च शक्त्युपेतस्तथैव च ।
नाहवादी न दिद्रक्षा न यत्किंचनकारक ॥ २० ॥

कुले कर्मण्यमात्याना कनामात्यजनप्रिय ।
सगृहीतजनस्तद्वैध प्रसन्नवदन सदा ॥ २१ ॥

सदा भृत्यजनावेक्षी क्रोधी (च ?) समहामना ॥ २२ ॥

षाड्गुण्यस्य प्रयोक्तृत्व तानेव षड्गुणानाह—

सन्धिश्च विग्रहश्चैव यानमासनमेव च ।
द्वैधीभाव सश्रयश्च षाड्गुण्य परिकीर्तितम् ॥ २३ ॥

पणबन्ध स्मृत सधिरपकारस्तु विग्रह ।
जिगीषा शत्रुविषये यान यात्राभिधीयते ॥ २४ ॥

विग्रहेपि स्वके देशे स्थितिरासनमुच्यते ।
मारण रथ(न्ध्र)लाभस्तु द्वैधीभावस्तदुच्यते ।
उदासीन मध्यमे वा सश्रयात्मश्रय स्मृत ॥ २५ ॥

तेषा प्रयोगकालमाह--

समेन सधिरन्वेष्यो हीनेन च बलीयसा ।
हीनेन विग्रह कार्य स्वय राज्ञा बलीयसा ॥ २६ ॥

तत्रापि तस्य पार्ष्णिस्त बलीयास समाश्रयेत् ।
आसीन कर्मविच्छेदी शक्य कर्तुं रिपुर्यदा ॥ २७ ॥

अशुद्धपार्ष्णिर्बलवान् द्वैधीभाव समाश्रयेत् ।
बलिना विगृहीतस्तु यो सधेयन पार्थिव ॥ २८ ॥

सश्रयस्तेन कर्तव्यो गुणानामधमो गुण ।
बहुक्षयव्ययायास तथा यान प्रकीर्तितम् ॥ २९ ॥

बहुलाभकर वा स्यात्तदा यान समाश्रयेत् ।
सर्वशक्तिविहीनस्तु तदा कुर्यात्तु संश्रयम् ॥ ३० ॥

एवं च बोद्धा नृपतिर्गुणानां कालं च देशं च तथा विभागे ।
समाश्रयद्वार्गववत्प्रभुत्वं एतावदुक्तं नृपतेस्तु कार्यम् ॥ ३१ ॥

इति राजलक्षणम् । एवंविधलक्षणोपेत(क्त)श्चापरः राजा राज्यं कुर्यात् ।

तद्राज्यं कीदृशमाख्यात यात्—

स्वाम्यमात्यसुहृत्कोषदेशदुर्गबलानि च ।
स्वाम्यमात्यो जनपदा दुर्गं दण्डस्तथैव च ॥ ३२ ॥

कोशो मित्रं च धर्मज्ञ सप्ताङ्गं राज्यमुच्यते ।
सप्ताङ्गस्यापि राज्यस्य मूलं स्वामी प्रकीर्तितः ॥ ३३ ॥

तन्मूलत्वात्तथाङ्गानां स तु रक्ष्यः प्रयत्नतः ॥ ३४ ॥

राज्यस्य सहायाधीनता महायत्नत्वमाह—

अभिषेकार्द्रशिरसा राज्ञा राज्यावलोकिना ।
सहायावरणं कार्यं तत्र राज्यं प्रतिष्ठितम् ॥ ३५ ॥

यदप्यल्पतरं कर्म तदप्येकेन दुष्करम् ।
पुरुषेण(णा)सहायेन किमु राज्यं महादयम् ॥३६ ॥

तस्मात्सहायान्वरयेत् कुलीनान्नृपतिः स्वयम् ।
शूरा कु(न्कु)लीनजातीयान्बलयुक्तान् क्रियान्वितान् ॥ ३७ ॥

रूपसत्त्वगुणोपेतान्सज्जनान्क्षमयान्वितान् ।
क्लेशक्षमान्महोत्साहान्धर्मज्ञांश्च प्रियंवदान् ॥ ३८ ॥

हितोपदेशकान्राज्ञः स्वामिभक्तान्यशार्थिनः ।
एवंविधान्सहायांश्च शुभकर्मसु योजयेत् ॥ ३९ ॥

याज्ञवल्क्योऽपि--

समन्त्रिण प्रकुर्वीत राजा मौलान्स्थिरान् शुचीन् ।
तैः सार्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम् ॥ ४० ॥

निवर्तेतास्य यावद्भिरितिकर्तव्यता नृभिः ।
तावतोऽतन्द्रितान्सभ्यान्प्रकुर्वीत विचक्षणान् ॥ ४१ ॥

तेषां विनियोगमाह--

तेषां मध्ये नियुञ्जीत शूरान्दक्षान् कुलोद्भवान् ।
शुचीनाकरकर्मान्ते भीरूनन्तर्निवेशने ॥ ४२ ॥

धार्मिकान्धर्मकृत्येषु अर्थकार्येषु पण्डितान् ।
क्लीबान्स्त्रीषु नियुञ्जीत नीचान्नीचेषु कर्मसु ॥ ४३ ॥

अध्यक्षान् विविधान् कुर्यात्तत्र तत्र विपश्चितः ॥ ४४ ॥

राज्ञा राज्यामात्यक तत्र स्वामिलक्षणमुक्त्वाऽमात्यलक्षणमाह—

प्रे(प्र)ख(क्ष)क पाठकश्चैव गणक प्रतिबोधक ।
गूढमन्त्रश्च तत्त्वज्ञो कालज्ञो दृष्टवित्तथा ॥ ४५ ॥

पितृमातामहाभिज्ञः स्मृतिसिद्धान्तगोचरः ।
सन्धिविग्रहविद्वांश्च मन्त्री ह्येव प्रकीर्तितः ॥ ४६ ॥

मन्त्रिणश्च ब्राह्मणाद्य कार्याः इत्याह । अथ नामात्यलक्षणं विष्णुधर्मोत्तरे—

सर्वलक्षणलक्षण्यो मन्त्री राज्ञस्तथा भवेत् ।
ब्राह्मणो वेदतत्त्वज्ञो विनीतः प्रियदर्शनः ॥ ४७ ॥

स्थूललक्ष्यो महात्मा च स्वामिभक्तः प्रियंवदः ।
बृहस्पत्युशनःप्रोक्तां नीतिं जानाति तत्त्वतः ॥ ४८ ॥

रागद्वेषेण यः कार्यं न च हन्ति महाश्रित ।
लोकापवादाद्राजाथ भयं यस्य न जायते ॥ ४९ ॥

कलशक्षमस्तु धर्मात्मा विजितात्मा जितेन्द्रियः ।
शूरमन्त्रश्च तत्त्वज्ञः प्राज्ञो भक्तजनप्रियः ॥ ५० ॥

इङ्गिताकारतत्त्वज्ञ ऊहापोहविशारदः ।
शूरश्च कृतविद्यश्च न च मानी विमत्सरः ॥ ५१ ॥

चारप्रचारकुशलः प्राणिभिः प्रणयात्मकः ।
षाड्गुण्यविधितत्त्वज्ञश्चोपायकुशलस्तथा ॥ ५२ ॥

वक्ता विधाता कार्याणां नव कार्यानिपातिता ॥
समश्च राजभृत्यानां तथैव च गणप्रियः ॥ ५३ ॥

कालज्ञः समयज्ञश्च कृतज्ञश्च जनप्रियः ॥
यथानुरू(प)महाणां पुरुषाणां नियोजिता ॥ ५४ ॥

राज्ञः परान् कार्याणि सर्वाय भूमद्वह ॥
कृत्वा निवेदिता राज्ञि क्रमेणा गुरुलाघवम् ॥ ५५ ॥

शत्रुमित्रविभागज्ञो विग्रहस्य च तत्त्ववित् ॥
स राज्ञः सर्व कार्याणि कुर्याद् भृगुकुलावह ॥ ५६ ॥

विदितानि तथा कर्याण्य(ज्ञा)ज्ञातानि महाक्षित ॥
अज्ञानानि नरेन्द्रस्य कृत्वा कार्याणि भारत ।
अचिरेणापि विद्वेष मन्त्री समागच्छ(ति) ॥ ५७ ॥

करोति यश्च कार्याणि विदितानि महीपते ।
भेदो न तस्य भवति कदाचिदपि भ्रभुजा ॥ ५८ ॥

एवंगुणो यस्तु भवेच्च मन्त्री
वाक्ये च तस्याभिरतिश्च राज्ञः ।
राज्यं स्थिरं स्याद्विपुला च लक्ष्मी-
यस्य च(यशस्य?) शीमिभुवनत्रयेऽपि ॥ ५९ ॥

ज्ञान अमात्यलक्षणम्। अथतान्शामात्यनियोजने राज्ञः कार्यसाद्गुण्यथा कार्यहानिस्तमथ्याह कामन्दकः —

राज्ञा नियोजितमात्य राज्ञः सन्ति त्रयो गुणा ।
यशः स्वर्गनिवासश्च पुष्टश्च(पुष्कलश्च) धनागम ॥ ६० ॥

मूर्खं नियोजितमात्ये त्रयो दोषा महीपते ।
अयशः कर्महानिश्च नरके पतनं ध्रुवम् ॥ ६१ ॥

तस्मात्महीपति सम्यग विचार्य च पुनः पुनः ।
गुणवन्त नियुञ्जीत गुणहीनं न योजयेत् ॥ ६२ ॥

अमात्यव्यसनापन्नैर्ह्रियमाणा महीपाम ।
अशक्त उत्पतितु छिन्नपक्ष इवा(ण्ड)ज ॥ ६३ ॥

कामन्दकः —

व्यसनस्य प्रतीकारा राज्ञि राज्याभिषेचनम् ।
आयव्ययौ दण्डनीतिरमात्यप्रतिषेधनम् ॥
इत्यमात्यस्य कर्म हन्ति स व्यसनान्वित ॥ ६४ ॥

मा व्रणश्च ब्राह्मणान्य कार्यान्तरमाह —

सर्वथा तु विशिष्टेन ब्राह्मणेन विपश्चिता ।
मन्त्रयेत् परमं मन्त्रं राजा षाड्गुण्यसंयुतम् ॥ ६५ ॥

अन्यानपि प्रकुर्वीत शुचीन् प्राज्ञानवस्थितान् ।
सम्यगर्थ समाहर्तृन् सामान्यान्सुपरीक्षितान् ॥ ६६ ॥

मौलान् शास्त्रविद शूरांल्लब्धलक्षान् कुलोद्भवान् ।
सचिवान् सप्त वा राजा कुर्वीत सुपरीक्षितान् ॥ ६७ ॥

कुलीनाः शुचयः शूरा श्रुतवन्तो न रागिणः ।
दण्डिन (दण्डनीत) प्रयाकार मन्त्रिणः स्युर्महीपते ॥ ६८ ॥

अक्षैः सारिरकुटिलैः सद्वृत्तैः सुपरीक्षितैः ।
मन्त्रिभिर्धार्यते राज्यं सुस्तम्भैरिव मन्दिरम् ॥ ६० ॥

राजपत्रमरा ह्यूतं प्राध्यमानमितस्ततः ।
दुःखेन रक्ष्य राज्यं हि ध्याघ्राघ्रातमिवाविष (मिषम्) ॥ ८० ॥

रक्ष्यमाणा यदि छिद्रं कथंचित्प्राप्नुवन्ति न ।
सिंहशावा इव घ्नन्ति न हि राज्यमसंशयम् ॥ ८१॥

पितर स्वमसंशनाम याप पाट ।

इति राजपत्राशेषः । प्रसङ्गाद्राजपत्रस्य कृत्यम्—

पितुसर्वापरस्तिष्ठेत्कार्यवान्भानसं सदा ।
तत्कर्म कर्यान्नियतं येन तुष्टो भवत्पिता ॥ ८२ ॥

नल कृ्यायन पिता मनागपि विषीदति ।
यस्मिन्पितुर्भवत्प्रीतिः स्वयं तस्मिन्प्रियं चरत् ॥ ८३ ॥

यस्मिन्द्वेष पिता कुर्यात्तस्यापि द्वेष्य एव स ।
असमतं विरुद्धं च स्वयं नैव समाचरत् ॥ ८४ ॥

प्राप्यापि यवराज्यं च प्राप्तयाद्विकृति न च ।
स सपत्निमर्हाश्चैव मातरं पितरं तथा ॥ ८५ ॥

भ्रातरं भगिनी चापि अन्यांश्च राजवल्लभान् ।
महाजनास्तथा राज्ञ नावमन्येत पीडयत् ॥ ८६ ॥

प्राप्यापि महतीं वृद्धिं वर्तेत पितुराज्ञया ।
पुत्रस्य पितुराज्ञा हि परमं भूषणं स्मृतम् ॥ ८७ ॥

सोदरेषु च सर्वेषु नाधिक्यं सम्प्रदर्शयत् ।
भ्रातृणामवमानेन बहवो हि विनाशिताः ॥ ८८ ॥

पितुराज्ञोल्लङ्घनेन प्राप्यापि पदमुत्तमम् ।
तस्माद्भ्रष्टा भवन्तीह दासवद्राजपुत्रका ॥ ८९ ॥

एव शुह्लाविरोधेन राजपुत्रा वमन्गृह ।
त्यागी च मत्त्वमपन्न मन्त्री कुयाद्दश स्वक ॥ ९० ॥

शन शन प्रयत्नेन शक्रुपक्षमृगाङ्कवन ।
एव वृत्ता राजपत्रा राज्य प्राप्याप्यकण्टकम् ।
महायवान्महामात्यश्चिर भुडक्त वमुधराम् ॥ ९१ ॥

सहाय पवाका सा । इति राजपत्रस्य नन्दणम—

विनयापग्रहाभ(भू )य कर्त्रीत नृपति भतान ।
विनीतमौरम पुत्र यावराज्यभिषेचयत् ॥ ९२ ॥

इति रनन विनानम्यर गया रत म मद्र पत्नगधनेन प्र य —

राजपुत्र म दुर्वत्त परित्याग हि नार्हति ।
क्लिश्यमान म पितर परानाश्रित्य हन्ति हि ॥ ९३ ॥

व्यसने मज्जमान हि कुशयद्यमना य ॥ ९४ ॥

इति मनसङ्गमनमात्यान ग्रण । सुहृद —

नृपस्य ते हि सुहृदस्त एव गुरवा मता ।
य एनमुत्पथगत वारयन्त्यनिवारिता ॥ ९५ ॥

सज्जमानमकायषु महदा धारयन्ति य ।
सत्य त नैव सुहृदा गुरवा गुरवा हि त ॥ ९६ ॥

कोशनिरूपणम-

वधमानाल्पनिम्नाव(व )स्यात शक्तिर्भवन ।
इभितद्रव्यसपूर्णा हय आमरधिष्ठित ॥ ९७ ॥

मुक्ताकनकरत्नाढ्य पितृपनामहाचित ।
यत्र राजा तत्र काश काशाधीना हि राजता ॥ ९८ ॥

अ गादय परश्रीबलाका लोकस्य निश्चित ।
पुमानथेन रहिता जीवन्नपि न जीवति ॥ ९९ ॥

यस्याथास्तस्य महदा यस्याथास्तस्य पौरुषम् ।
यस्याथास्तस्य सर्वेपि सहाया सभवन्ति हि ॥ १०० ॥

आपदथ च सरक्ष्य कोश कोशवता सदा ।
पुत्रादपि हि सरक्ष्या भार्याया सुहृदस्तथा ॥ १०१ ॥

नान्याय्य च व्यय कुर्यात्प्रत्यवेक्षत ता(चा)न्वहम् ।
कृषिवाणिज्ययोर्दुर्गमन कुञ्जरबन्ध(बन्ध?)नम् ॥ १०२ ॥

खन्यखरखनादान(खन्याकरखनादान) स्वस्थाचिनापि वधयत् ।
कोशमूलापि राजेति प्रवाद सार्वलौकिक ॥ १ ३ ॥

एतत्सव जहातीह कोशे व्यसनवान्नृप ।
क्षीण बण(ल) वधयति स्वनो ग्रह्णाति च प्रजा ॥ १०४ ॥

कोशवान्पृथिवीपाल परैरप्युपजीव्यते ।

कोशा ध्यक्ष यथ । कोश नस्य इत्यत रक्षण चा यक्षाध्यक्षस्यमिति कोशाध्यक्ष लक्षणमाह—

लोहवस्त्राजिनादीना रत्नानामभिधानवित् ॥ १०५ ॥

विज्ञाता फल्गुसाराणा अनाहाय शुचिस्मित ।
निपुणश्चाप्रमत्तश्च धनाध्यक्ष प्रकीर्तित ॥ १०६ ॥

इति कोशनिरूपणम । अथ दण्ड —

यो राष्ट्रमनुगृह्णाति परिगृह्य स्वय नृप ।
सजातमुपजीवन्स लभते सुमहत्फलम् ॥ १०७ ॥

पौराञ्जानपदा सर्वान्संश्रितोपाश्रितास्तथा ।
यथाशक्त्यानुकम्पेत सर्वानप्यधनानपि ॥ १०८ ॥

धर्माधर्मौ विजानीहि मत्वा शास्त्रमनुस्मरन् ।
प्रजा रक्षेन्नृप साधु हन्याच्च परिपन्थिन १०९ ॥

राष्ट्रोपघातं कुर्वीरन्ये पापा राजवल्लभा ।
एकैकश सहतास्ता वृथा वा परिचक्षत ।
तथ्यानुपाशुदण्डेन हन्याद्राजाविलम्बितम् ॥ ११० ॥

इति राष्ट्रम् । दुर्गस्वरूपनिरूपणम् । तत्र मनुः ( ? ) दुर्ग(ग)माहात्म्यमाह --

एक शत योधयति प्राकारस्थो धनुर्धर ।
शत दशसहस्राणि तस्माद्दुर्गं समाश्रयेत ॥ १११ ॥

मर्यादाविहीन च पालतस्करसयुतम् ।
एवविध यथालाभ राजा विषयमाविशेत ॥ ११२ ॥

तत्र दुर्ग नृप कुर्यात षट्(ण्णा ? )मेकतम बुध ॥ ११३ ॥

षड्दुर्गानाह---

धन्विदुर्ग महीदुर्ग नरदुर्ग तथैव च ।
वार्क्ष चैवाम्बुदुर्ग च गिरिदुर्ग तथैव च ॥ ११४ ॥

तेषा मध्ये गिरिदुर्ग विशेषमाह—

सर्वेषामेव दुर्गाणा गिरिदुर्ग प्रशस्यते ।
दुर्ग च परिखोपेत वप्राट्टालकसयुतम् ॥ ११५ ॥

शतघ्नीयन्त्रमुख्य(श्च) शतशस्तु समाकुलम् ।
गोपुर सकपाट च तत्र स्यात्सुमनोहरम् ।
सपताको गजारूढो येन राजा विशालमव(शेत्स्वयम ? ) ॥ ११६ ॥

तस्य मध्ये तु पर्याप्त कारयेद्गृहमात्मन ।
गुप्त सर्वर्तुक शुभ्र जलवृक्षसमन्वितम् ॥ ११७ ॥

तदुक्त मात्स्य—

इत्येवमेतै मकलैरुपेतैद्र्यैः पराध्यैं परिरक्षित स्यात् ।
राजा वमेत्तत्र गृहे सुशुभ्र गुणान्वित लक्षणसम्प्रयुक्त ॥ ११८ ॥

तत्र दुर्ग इत्यथ । अथ दुर्गस्य स्थलविभागमाह—

चतस्रश्च तथा तत्र कार्यास्त्वायतवीथय ।
एकस्मिंस्तत्र वीथ्यग्रे देववश्म भवेद्दृढम् ॥ ११९

वीथ्यग्रे च द्वितीये तु राजवश्म विधीयते ।
धर्माधिकरण कार्य वीथ्यग्रे च तृतीयके ॥ १२० ॥

चतुर्थे चैव वीथ्यग्रे गोपुर तु विधीयते ।
आयत चतुरस्र वा वृत्त वा कारयेत्परम् ॥ १२१ ॥

अन्तहीन त्रिकोण च यवमध्य तथव च ।
अर्धचन्द्रप्रकार च वज्राकार च कारयेत् ॥ १२२ ॥

अर्धचन्द्र प्रशसन्ति नदीतीरेषु तद्वसत् ।
अन्यत्र तु न कुर्वीत प्रयत्नेन विजानता ॥ १२३ ॥

राज्ञा कोशगृह कार्य दक्षिणे राजवश्मत ।
तस्यापि दक्षिणे भागे गजस्थान विधीयते ॥१२४ ॥

गजाना प्राङ्मुखी शाला कर्तव्या वाप्युदङ्मुखी ॥ १२५ ॥

आग्नेये च तथा भागे आयुधागारमिष्यते ।
महानस च धर्मज्ञकर्मशाला तथापरा ॥ १२६ ॥

गृह पुरोधस कार्य वामतो राजवेश्मन ।
मन्त्रिदैववविदा चैव चिकित्साकर्तुरेव च ॥ १२७ ॥

तत्रैव च महाभाग गृहाणि च विधारयेत् ।
मद्या स्थानं तथैवात्र तुरगाणां तथैव च ॥ १२८ ॥

उत्तराभिमुखा श्रेणी तुरगाणां विधीयते ।
दक्षिणाभिमुखा चाथ परिशिष्टास्तु गर्हिता ॥ १२९ ॥

दुर्गशालाया विशेषमाह—

तुरङ्गास्ते तथा धार्या प्रदीपैः सर्वरात्रिकैः ।
कुक्कुटान्वानरांश्चैव मर्कटांश्च नराधिप ॥ १३० ॥

गोगजाश्वादिशालासु तत्पुरीषस्य निर्गमः ।
अस्तंगते न कर्तव्या देवेन्द्र दिवाकरे ॥ १३१ ॥

दुर्गे तत्र यथास्थानं राजा विज्ञाय सारथीन् ।
दद्याद्देवमथस्थानं सर्वेषामनुपूर्वशः ॥ १३२ ॥

योधानां शिल्पिनां चैव सर्वेषामविशेषतः ।
दद्याद्दैवमथान्यं मन्त्रकालविदां(दः) शुभान् ॥ १३३ ॥

गोवैद्यानश्ववैद्यांश्च गजवैद्यांस्तथैव च ।
आहरेत बलं राजा दुर्गे परबलं रुजे ॥ १३४ ॥

कुशीलवानां विप्राणां दुर्गे स्थानं विधीयते ।
बहूनां च न वै दुर्गे विना कार्यं ततो भवेत् ॥ १३५ ॥

स्थलविभागमुक्त्वा दुर्गसंपत्तिमाह—

दुर्गे तु यन्त्राः कर्तव्या नानाप्रहरणान्विताः ।
सहस्रघातिनो राजंस्तस्य रक्षा विधीयते ॥ १३६ ॥

दुर्गद्वाराणि गुप्तानि कार्याण्यपि च भूभुजा ।
संग्रहश्चात्र सर्वेषामायुधानां च शस्यते ॥ १३७ ॥

धनुषा क्षेपणीया(या)नामायुधाना च शस्यते।
शराणामथ खड्गाना कवचाना तथव च ॥ १३८ ॥

कणपाना त्रिशूलाना पट्टिशाना तथव च।
प्रासाना चव शस्त्राणा शक्तीना च तथव च ॥ १३९ ॥

परश्वधाना चक्राणा चमणा वमभि सह।
कुठाररुजु( रज्जु ?) वत्राणा पट्टिकाना तथव च ॥ १४०।

हेतुकाना च रथाना मङ्गलाना च मशय ।
सर्वेषा शिल्पिभाण्डाना सचयस्तत्र चेष्यते ॥ १४१ ॥

वादित्राणा च सवषामाषधीना तथव च।
यवमाना प्रभूताना इन्धनाना तथव च ॥ १४२ ॥

गडस्य सवतलाना गारसाना तथैव च ।
वसानामथ मज्जानां स्नायूनामस्थिभि सह ॥ १४३ ॥

गाचमपञ्हाना च धान्याना सवतस्तथा ।
तथैवाभ्रपठाना ( ? ) च यवसाधूमयारपि ॥ १४४ ॥

सणसाजरस भूज जतुलाक्षा च टङ्कणम्।
राजा सचिनुयाद्दग यच्चान्यदपि किंचन ॥ १४५ ॥

रत्नाना सर्वलाहाना वस्त्राणा चाप्यशषत ।
कात्रवमद्गमाषाणा चणकाना तिलै सह ॥ १४६ ॥

तथा च सवसस्याना पासगामययोरपि।
कुम्भाश्चाशीर्वि( ष )युक्ता व्यालसिंहाद्यस्तथा ॥ १४७ ॥

भृङ्गाश्च पक्षिणश्चव रक्ष्यास्त च परस्परम्।
स्थानानि च विरुद्धाना सुगुप्तानि पृथक पृथक ॥ १४८ ॥

कर्तव्यानि महाभाग यत्नन पृथिवीभुजा।
उक्तानि चाप्यनुक्तानि राजा द्रव्याण्यनकश ॥ १४९ ॥

सुगुप्तानि पुरे कुर्याज्जनानां हितकाम्यया ।
उक्तानि चाप्यनुक्तानि ॥ १५० ॥

विषाणां वारकं कार्यं प्रयत्नेन महीभुजा ।
विचित्रा श्वापदा कार्या विषस्य शमनास्तथा ॥ १५१ ॥

रक्षोभूतपिशाचानां परघ्ना पुष्टिवर्धना ।
कलाविदग्धपुरुषा दुर्गे धार्याः प्रयत्नतः ॥ १५२ ॥

भीतान्क्रुद्धान्प्रमत्तांश्च तथैव च विमानितान् ।
कुभृत्यान्पापशीलांश्च न राजा वासयेत्पुरे ॥ १५३ ॥

आयधानि च सर्वाणि यन्त्र नाना मत्स्यरगणाकान जयाल—

यन्त्रायुधाट्टालचयोपपन्नं समग्रधान्यौषधिसत्प्रयुक्तम् ।
वणिग्जनैश्चावृतमावसेत दुर्गं सुगुप्तं नृपतिः सदैव ॥ १५४ ॥

इति दुर्गलक्षणम् । दुर्गसङ्ग्रहोपयोगी ... नाह—

अनाहार्यश्च शूरश्च वाग्मी प्राज्ञः कुलोद्गतः ।
वृत्या यश्च स्मृतो राज्ञ उद्युक्तः सर्वकर्मसु ॥ १५५ ॥

गजानां प्राद्भूता शाल्युक्त नदथ गजभदान आसामाह—

यतो गजैर्विना राज्ञो राजशोभा न जायते ।
जयप्रतापभिन्यस्य रक्षा तस्मादिहोच्यते ॥ १५६ ॥

पुरा स्वर्गे सुखेनासन् कामगाः खचरा गजाः ।
मुनिशापाद्गता भूमौ नता जाता वनेचराः ॥ १५७ ॥

गजभेदानाह—

भद्रो मन्द्रो मृगो मिश्रश्चतुर्धा जायते गजः ।
त्रयोऽभवन्युगत्रये भूवन्मिश्राः कलियुगे गजाः ॥ १५८ ॥

यत स्य तना धमा यता धमस्तना धनम् ।
यतो रूप तत शील यतो नागस्ततो जय ॥ १५९ ॥

यद्वद्वन(वनम)सिंह च यद्वद्राष्टमपार्थिवम् ।
यद्वच्छायमशस्त्र च तद्वत्सैन्यमकुञ्जरम् ॥ १६ ॥

प्राकारगोपुराट्टालकपाटोद्घाटनादिषु ।
भञ्जने मर्दन चव नागा वज्रोपमा स्मृता ॥ १६१ ॥

शरजालाञ्चितमस्त्र कोऽय शक्त पर गजात् ।
हन्तु प्राकारमुन्मथ्य रथाश्वनरकुञ्जरान् ॥ १६२ ॥

एकशक्तिप्रहारण म्रियतेऽश्वा नरोपि च ।
महेन्महाप्रहाराणा शत युद्धषु वारण ॥ १६३ ॥

चीत्कारनाशय न स्वपतिभटमनो मादयन्तो मदाढ्या
मग्नामसीम्नि खिलबहलना बाढमाढाकमाना ।
शुण्डादण्डप्रहारै परमपि च बल कम्पयन्त परेषा
यथा मव गजेन्द्रा भुवि विजयवि ग ते मता भमिपाला ॥ १६४ ॥

चलन्ति यथा न शत गजेन्द्रा पर प्रयाण चलशलतुल्या ।
वाञ्छन्ति चैव विजय कथ ते राजाति शब्द च कथ भजन्ते ॥१६५॥

तावद्गर्ज न वीयात्परनिधनविधौ युद्धमध्यापि वीरा-
स्तावद्धावन्ति वग परमपि दधत समुखीनास्तुरङ्गा ।
शरारूढ सुसज्जा मदमदितमान( मना ? ) मानमान विधुन्वन्
यावन्नायाति कोपात्कृतविविधरवाऽपि एकापि नाग ॥ १६६ ॥

मातङ्गैरपि यैर्महेन्द्रभवन पर्याधिक जन्यते
य श्यामरपि सर्वलोकमहिता कीर्ति समातन्यत ।
यैमत्तरपि सङ्गरे रिपुमद शोष समानीयत
तर्मी भाग्यवत प्रयान्ति पुरत स्तम्बरमा भपते ॥ १६७ ॥

इति प्रशंसा । भद्रलक्षणानि—

प्रतिमानेषु विपुलश्चारुवक्त्रायताननः ।
मुखे सुरभिनिश्वासस्ताम्रजिह्वोष्ठतालुकः ॥ १६८ ॥

तथास्य तुल्यसंस्थाना दन्ता शुभ्रा विशेषतः ।
मधुपिङ्गलनेत्रश्च महाकाया महाबलः ॥ १६९ ॥

परस्तादुच्छ्रितश्चापि पश्चान्नवनतापि च ।
धनुर्विनताविंशश्च(?)समपादतलः शुभः ॥ १७ ॥

विंश या च नखैर्युक्ता अष्टादशभिरेव वा ।
विशुद्धावाग्निसिंहभ्या न बिभेत्यशक्ते(कृशा)त्पि ॥ १७१ ॥

अन्वर्थवेदी श(र)श्च क्षमावाञ्च कर्कशः ।
कल्याणमेधास्तेजस्वी भद्रः स परिकीर्तितः ॥ १७२ ॥

अथ मन्द्--

महाग्रीवा महावक्त्रा महामाथा महोदरः ।
पि(पी)नास्त्वश गात्रत्वक्सुविभक्ता महासुरः ॥ १७३ ॥

बहलबहुभिर्दीर्घैर्युक्तः स्निग्धतनूरुहैः ।
स्थिरैः स्थिराक्रान्तितलैः पादैश्च पृथुभिः समः ॥ १७४ ॥

स्थिरस्निग्धः विशाल च पीने चापि प्रकीर्तितः ।
विषाणे तस्य विबुद्धिरोष्ठा दन्तिश्च रामशः ॥ १७५ ॥

कूर्मसंस्थानगमनो मन्दा मम्यगतिक्रमः ।
समीक्ष्य लोचने नित्य निद्रान्ध इव गच्छति ॥ १७६ ॥

मृग —

तनुत्वक्कणपादो य स्तब्धास्यस्तनुमेहनः ।
तनुग्रश्नोदरश्चैव तनूपक्ततनूरुहः ॥ १७७ ॥

दीर्घजिह्वविषाणश्च दीर्घगात्रस्तथा च स ।
प्रम्वस्तरामकणश्च पुरस्ताच्चापि सवृत ॥ १७८ ॥

निपाते गोचरस्थाने धाया शय चा(?)निवृत ।
ह्रस्वश्रवणलाङ्गूलो दीर्घ विक्रमते क्रमै ॥ १७९ ॥

पुन पुनश्च विनदन् दुगतिश्चापि धावति ॥ १८० ॥

अथ मिश्रलक्षणम्—

बह्वाशी बह्वलीकश्च दण्डपातषु चाक्षम ।
गच्छत्प्रकृष्टवेगश्च भार प्राप्यावसीदति ॥ १८१ ॥

कृच्छ्राच्चाप्यायत नाम क्षिप्र च परिहीयते ।
बह्वम्ललवणैश्चापि रुक्षैश्चातुरता व्रजेत् ॥ १८२ ॥

नित्य च मा स्वयंदन न चनमभितापयेत् ।
सर्वेषा लक्षण कश्चियक्तो मिश्रो भवेन्नज ॥ १८३ ॥

शरतोमरवज्रैश्च गजस्कन्धहता नरा ।
क्षणात्स्वग प्रयन्त्यव तस्मात्स्वर्गोपमा गजा ॥ १८४ ॥

इत्यव पर्वोक्तनसपत्तिसहित दुग गजा मस्त वसंत । इति माङ्गदुर्गनिरूपणम् । अथ
चाल( ल )निरूपणम् । तच्च( ब )ल षाड्विधम्—

षड्विध तु बल व्यूह्य द्विषतोभिमुख व्रजेत् ॥ १८५ ॥

ज्ञान षाड्व बलम । तद्यथा—

मौल भृत श्रेणि सुहृद द्विषदाटविक बलम् ।
पूर्वं पूर्व गरीयस्तु बलाना विषम स्मृतम् ॥ १८६ ॥

अस्याथ । मौल परम्परागतम् । भत वार्त्ताद्विभक्तस्य च । श्रेणि गमनमार्गे स्थाने निवेशि(त ?) । सहृन्मित्रबलम् । द्विषदधीन ज्ञान यत्तद् द्विषत । आत्विक आण्यसन्धि । उक्तस्य च नरथ चतुरङ्गत्(ना)माह—

हस्त्यश्वरथपादात सेनाङ्ग स्याच्चतुर्विधम ॥ १८७॥

इति बलम् । बलस्य सेनाप यधानत्वात् सेनापतिलक्षणमाह—

कुलीन' शीलसपन्नो धनुर्वेदविशारद' ।
हस्तिशिक्षादिकुशलो नित्य हि श्लक्ष्णभाषित' ॥ १८८ ॥

निमित्ते शकुनज्ञाने वेत्ता चैव चिकित्सके ।
कृतज्ञ' कर्मणा शरस्तथा क्लेशसहा ऋ( हस्त्र )जु ॥ १८९ ॥

व्यूहतत्त्वविधानज्ञ फल्गुसारविशेषन ।
राज्ञा सेनापति' कार्यो ब्राह्मण क्षत्रियोथवा ॥ १९० ॥

एव ये कुशल शूर हिते स्थितमकल्मषम् ।
सेनापतिं प्रकुर्वन्ति ते जयन्ति रणे रिपून् ॥ १९१ ॥

बृहस्पतिसम बुध्या क्षमया पृथिवीसमम् ।
समुद्रमिवगाम्भीर्य हिमव'तमिवाचलम् ॥ १९२ ॥

प्रजापतिमिवौदार्य तेजसा भास्करोपमम् ।
महेन्द्रमिव शत्रूणा ध्वसन शरवृष्टिभि ॥ १९३ ॥

इति सेनापतिलक्षणम ।

हस्तिशिक्षाविधानज्ञा वनजाति( वि )शारद ।
क्षेत्रा( क्लेश )क्षमस्तथा राज्ञो गजाध्यक्ष प्रशस्यत ॥ १९४ ॥

एतैरेव गुणैर्युक्त स्थविरस्य(श्च) विशिष्यते ।
गजारोही नरेन्द्रस्य सर्वकर्मसु शस्यते ॥ १९५ ॥

अश्वाध्यक्ष --

**हयशिक्षाविधानज्ञोऽश्वचिकित्सितपारग (गः) ।**
**अश्वाध्यक्षो महीभर्तुः श्वा(स्वा)सनस्य(श्व)विशिष्यत ॥ १०६ ॥**

अथ राजभूषण समाङ्गनिरूपणम् । अथ राजहस्त्यनिरूपणम्—

**विचिन्त्य कार्याणि निशावसाने विद्वत्सुहृन्मण्डलमिश्रितानाम् ।**
**बलार्थदेशेषु नियोजितानां समाश्रितानां च कृताकृतानि ॥ १९७ ॥**

**स वेणुवीणापटहस्वनानां गीतेन पूर्व यपनीतनिद्रः ।**
**शय्यां त्यजेत्पूर्वनिशावसाने शृण्वन्गिरो मङ्गलपाठकानाम् ॥ १९८ ॥**

तदुत्तम्मात्रिकोत्तगे या शौचन्ते राधनानि कुर्यात् । तदुक्त मनना--

**प्रातरुत्थाय नृपतिः कुर्याद्दन्तस्य धावनम् ॥ १९९ ॥**

शौचा गर इयनन प्रात।प्रक्षादपय(र)नमप(प) क्षयम । तत यादशात्शनपूर्वक श्मश्रु-मस्कार । अनन्तर दैवज्ञमुखात्पञ्चाङ्गश्रवणम् ।

**श्रुत्वा तिथीभग्रहवासर च प्राप्नोति धर्मार्थयशांसि सौख्यम् ।**
**आरोग्यमायुर्विजयं जयं च दुःस्वप्ननाशं च तथा विदध्यात् ॥ २०० ॥**

ततश्च—

**प्रणम्य देवांश्च गुरूंश्च सर्वान्दत्त्वा च गा वत्सयुता द्विजाय ।**
**दृष्ट्वा मख सार्पिषि दर्पणे च सर्पिश्च दद्यात्सहिरण्यमेव ॥ २०१ ॥**

तत प(पर)गश्मदादिग्रहणाय चारा प्रेषयत् । तदाह कामन्दक—

**प्रेषयच्च ततश्चारान् देशेष्वन्येषु सादरम् ॥ २०२ ॥**

तथा लक्षणमाह मात्स्य (त्स्य)—

**अनाहार्या क्लेशसहान् नियुञ्जीत सदा नवान् ।**
**जनस्याविदितान्सौम्यास्तथाज्ञातान्परस्परम् ॥ २०३ ॥**

कथिता मतम राजन् राजानश्चारचक्षुष ।
स्वके देशे पर दृश ज्ञानशीलाविचक्षणान् ॥ २०४ ॥

वणिजो मन्त्रकुशलान् माव मरचिकित्सकान् ।
तथा भव्राजिताकारा(श्चारान्राजा नियोजयत्) ॥ २०५ ॥

न च(चा)स्य रा(राजा)श्रद्दध्याच्चारस्य प्रियभाषित (तम्) ।
द्वयो सवन्धमाज्ञाय श्रद्दध्यान्नृपतिस्तत ॥ २०६ ॥

परस्परस्याविदितो यदि स्याता चरावुभौ ।
तस्माद्राजा प्रयत्नेन गूढाश्चारान्नियोजयेत् ॥ २०७ ॥

तपस्विलिङ्गिनो धूर्ता पण्यशिल्पोपजीविन ।
चाराश्चरेयु परित पिबन्तो जगतो जन (नान्) ॥ २ ८ ॥

निगच्छेयुर्विशेयुश्च सर्वत्रातविदो ह्यत ।
चारा सकाशा नृपतेश्चक्षुर्दूरचर हि तद् ॥ २०९ ॥

सूक्ष्मसूत्रप्रचारेण गणयेद्विविधचेष्टितम् ।
स्वपन्नपि हि जागर्ति चारचक्षुर्महीपति ॥ २१० ॥

कामन्दकोप--

अनेनासपत्नामुद्रा(तन्मात्रा)त्पतत्यन्ध(न्ध) समपि हि ।
सर्वसपत्नमनुप्य सर्वावस्थाविचेष्टितम् ।
चरेण विद्विषा क्रियादुद्दशप्राथनादि वा ॥ २११ ॥

इति । तान्नयाग च नपामाप स्वरूपज्ञान भवात---
विश्रम्भेणापि च प्रभुणा यदाज्ञापयति प्रभु ।
तस्य कर्ता स एव स्याद्गुणीभूतस्तु शकर ॥ २१२ ॥

कर्तव्य भृत्यवर्गाय स्वामी चेन्न समादिशेत् ।
अस्तिनास्तीति कस्तर्हि तस्य ज्ञास्यति पौरुषम् ॥ २१३ ॥

ततश्च—

ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनन्दित ।
दृष्ट्वा ज्योतिर्विदो वैद्यान् दद्याद् गां काञ्चन महीम् ॥ २१४ ॥

सभां प्रविशादिति । पुरोहितादीनां लक्षणान्याह—

वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायण ।
आशीर्वादपरो नित्य एष राजपुरोहित ॥ २१५ ॥

अ(ध) धर्माधिकारी—

सम शत्रौ च मित्रे च धर्मशास्त्रविशारद ।
विप्रमुख्य कुलीनश्च धर्माधिकरणी(णे) भवेत् ॥ २१६ ॥

अथ ज्योतिर्वित्—

यत्प्रोक्त त्रिपुरान्तकेन बहुधा शास्त्र स्वराणां द्विज-
स्तत्राभ्यासरतो जितेन्द्रियचय शास्त्राभिभाषी च य ।
स्पृष्ट कर्म दिवौकसा सुगु(गी)णिनाञ्जानाति नि सशयम्
तस्यादेशविधायिनि क्षितिपतौ स्थैर्य जयश्रीर्भवेत् ॥ २१७ ॥

व्यक्ताङ्क फलकालक्षित् सुकृतवान्पूर्वापरस्माकर (रक)
पाटीकुट्टकबीजशास्त्रचतुर सिद्धान्तविद्याआलि ।
वर्णावर्णसवर्णनैकगु(ग)णने भूयो महानुद्यमी
सम्प्राज्जातकनिद्ध एव गणक श्लाघ्यो विदा नापर ॥ २१८ ॥

भिषक्—

पारम्पर्यागतो य स्यादष्टाङ्गेषु चिकित्सिते ।
अनाहार्य स वैद्य स्यात् धर्मात्मा च कुलोद्गत ॥ २१९ ॥

भाणाचार्य स विज्ञेयो वच(स्तस्य च भु)भुजा ।
राजन्याज्ञा सदा कार्य यथा कार्य पृथग्जनै ॥ २२० ॥

सभाप्रवेशः —

स्मितप्रसन्नं प्रथमाभिभाषितैः प्रसादवृष्ट्या(दृष्ट्या) करसंग्रहैश्च ।
यथानुकूलं हृदयान्यपि द्विषां प्रसादयन् धर्मसभां प्रवेशयेत् ॥ २२१ ॥

तत्र स्थितः प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् ।
विसृज्य च प्रजाः सर्वा मन्त्रयेत्सह मन्त्रिभिः ॥ २२२ ॥

खड्गधारिणो निकटस्थान् वासलक्षणमाह —

सुरूपस्तरुणः प्रांशुर्दृढभक्तः कुलोद्भवः ।
शूरश्चैव सहश्चैव खड्गधारी प्रकीर्तितः ॥ २२३ ॥

अथ रक्षिणः —

प्राज्ञावो व्यायता शूरा दृढभक्ता निराकुला ।
राज्ञा तु रक्षिणः कार्याः सदा क्लेशसहा हिता ॥ २२४ ॥

ताम्बूलधारी —

अत्राह्मणोऽनृशंसस्य(श्च) दृढभक्तिश्च पार्थिव ।
ताम्बूलधारी भवति नारी वाप्यथ तद्गुणा ॥ २२५ ॥

अत्रैव प्रसङ्गे सकलभूधारणः सर्वलक्षणमन्यत —

ताडितापि दुरुक्तापि दण्डितापि महीभुजा ।
न चिन्तयति यः पापं स भृत्यार्हो महीभुजाम् ॥ २२६ ॥

भर्तुरधासनं स्थर्यसहुना यत्र तिष्ठति (निक्षिपन्) ।
(ब्रूयाश्च किंचिन्न्यायं च तिष्ठच्चास्य विलोकयन्) ॥ २२७ ॥

कान्तेयद्दामिति ब्रूया सम्यगाज्ञापयति वा ।
आज्ञा चावितथा कुर्याद्यथाशक्त्यविलम्बितम् ॥ २२८ ॥

सभा वृत्तमाह—

उद्गारं प्रहसनं कासं ष्ठीवनं कुत्सनं तथा ।
जृम्भणं गात्रभङ्गं च परी(व)स्फोटं च वर्जयेत् ॥ २२९ ॥

प्रविश्य मातुरागम्य चित्तज्ञः स्याच्च सम्मतः ।
मर्मथयश्च मन्यश्च माधु भाषत भाविते ॥ २३ ॥

नक्तियागेन वा ब्रूयादथ सुपरिनिश्चितम् ।
सुखप्रसङ्गगोष्ठीषु विवाद वादिना सत ॥ २३१ ॥

विजानन्नपि न ब्रूयात् भर्तुः क्षिप्रोत्तरं वचः ।
प्रणीणापि च सभायां वर्जयेदभिमानिताम् ॥ २३२ ॥

यद्गुह्यञ्चैव विजानीयान्नीचैस्तदपि कीर्तयेत् ।
कर्मणा तस्य वैशिष्ट्यं कथयद्विनयान्वितः ॥ २३३ ॥

आपद्युन्मार्गगमने कार्यकालात्ययेषु च ।
अपृष्टोपि हिता(ना)न्वेषी ब्रूयात्कल्याणभाषितम् ॥ २३४ ॥

ये शूरा ये च विद्वांसो ये च सर्वा विपश्चितः ।
य(ते)षामेव विकाशिन्यो भाग्या नृपतिसम्पदः ॥ २३५ ॥

अनुकूलं प्रियं तस्य वक्तव्यं जनसंसदि ।
रहोगतस्य वक्तव्यमप्रियं यद्धितं भवेत् ॥ २३६ ॥

अन्तःपुरधनाध्यक्षैर्वैरिदूतैः पराकृतैः ।
संसर्गं न व्रजेत्प्राज्ञो विना पार्थिवशासनात् ॥ २३७ ॥

दुष्कृतं हि नरेन्द्रस्य न च संकीर्तयेत्क्वचित् ।
वस्त्रमस्त्रमलङ्कारं राज्ञा द(त्त)त्तं च धारयेत् ॥ २३८ ॥

शाठ्यं लौल्यं च पैशुन्यं नास्तिक्यं क्षुद्रता तथा ।
चापल्यं च परित्याज्यं नित्यं राज्ञोनुजीविभिः ॥ २३९ ॥

इति सचिवसंख्यादिकथनम् । अथ सभासदः —

धर्मशास्त्रार्थकुशलाः कुलीना मतयवादिनः ।
समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः ॥ २४० ॥

तस्मात्सभ्यः सभां गत्वा रागद्वेषविवर्जितः ।
वचस्तथाविधं ब्रूयादन्यथा नरकं व्रजेत् ॥ २४१ ॥

नीतिशास्त्रेषु मया यथाशक्ति क्रमाभिनिवेश कार्य —

मेधावी वाक्पटुर्धीमाल्लघुहस्तो जितेन्द्रियः ।
शब्दशास्त्रपरिज्ञाता एष लेखक उच्यते ॥ २४२ ॥

मन्त्रयन्त्रमं प्रभाग यक तत्व ह —

गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः ।
अरण्ये नि(नि:)शलाके वा मन्त्रयेदविभावितः ॥ २४३ ॥

मध्यंदिनेऽर्धरात्रे वा विश्रान्तो विगतक्लमः ।
चिन्तयेद्धर्मकामार्थान् सार्धं तैरेक एव वा ॥ २४४ ॥

कन्यानां संप्रदानं च कुमाराणां च रक्षणम् ।
दूतसंप्रेषणं चैव कार्यशेषं तथैव च ॥ २४५ ॥

अन्तःपुरप्रचारं च प्रणिधीनां च चेष्टितम् ।
कृत्स्नं चाष्टविधं कर्म पञ्चवर्गं च तत्त्वतः ॥ २४६ ॥

अनुरागापरागौ च प्रचारं मण्डलस्य च ।
उपेतारमुपेयं च सर्वोपायांश्च कृत्स्नशः ॥ २४७ ॥

एतत्त्रयं समाश्रित्य प्रयतेतात्मसिद्धये ।
एवं सर्वमिदं राजा सह संमन्त्र्य मन्त्रिभिः ॥ २४८ ॥

चत्वारि राज्ञा तु महाबलेन वर्ज्यान्याहु पण्डितस्तानि(नि)बन्धयात् ।
अल्पप्रज्ञै सह मन्त्र न कुर्यान्न दीर्घसूत्रैरलसैश्चारणैश्च ॥ २४९ ॥

इति । भागवत—

धर्म प्रागेव चिन्त्य मविवशतिमति(?) सर्वदा चिन्तनीय
ज्ञेय लोकानुवृत्त वरत्रसुचन(?)मण्डल वीक्षणीयम् ।
प्रच्छाद्यौ रागरोषौ मृदुकठिनरमौ याजनीयौ स्वकाले
आत्मा यत्नेन रक्ष्या रणभुवि च पर मोपि नापेक्षणीय ॥ २५० ॥

उक्त—

क्रन वृत्तेन वृत्तज्ञा वतमानो महीपति ।
सुखनाक्षा(?)न्सुखोदकानिह च प्रत्य चाप्नुयात् ॥ २५१ ॥

चरेध(द्ध)मानकटुका युञ्जन्स्नह न नास्तिक ।
आनृशसश्चरेदथ चरेत्कालमनुद्धत ॥ २५२ ॥

प्रिय ब्रूयात्कृपण शर स्यादविकत्थन ।
दाता नापात्रवर्षी स्यात्प्रगल्भ स्यादनिष्ठुर ॥ २५३ ॥

सदधीत न नाचाय विगृह्णीयान्न बन्धुभि ।
नाभक्त जनयेच्चार कुर्यात्कार्यमपीडनम् ॥ २५४ ॥

अथ न ब्रा सत्सु वदेद्गुणान्ब्रूयान्न चात्मन ।
आदद्यान्न च साधुभ्यो नासत्पुरुषमाश्रयेत ॥ २५५ ॥

नापरीक्ष्य नयेद्दण्ड न च मन्त्र प्रकाशयेत् ।
विसृजेन्न स लुब्धेभ्यो विश्वसेन्नापकारिषु ॥ २५६ ॥

अनीर्षु गुप्तदार स्याच्चोक्ष स्यादघृणी नृप ।
स्त्रिय सेवेन नात्यर्थमिष्ट भुञ्जीत नाहितम् ॥ २५७ ॥

अस्तब्ध पूजयेद्मान्यान्गुरून्सेवेदमायया ।
अर्चेद्देवानदम्भेन श्रियामिच्छेदकुत्सिताम् ॥ २५८ ॥

सेवेदप्रणय हित्वा दक्ष स्यात्तत्वकालवित् ।
सान्त्वयेश्च मायाय अनगृह्णश्च क्षपेत् ॥ २५९ ॥

प्रहरत्वच त्रिवृत्तु न वहेश्च शोषयत् ॥ २६० ॥

तथा च कामन्दक —

निस्तम्भ निगवाक्षेच निर्भेदा तरसभय ।
प्रासादापयरण्य च मन्त्रयेताविभावित ॥ २६१ ॥

नावनयबहु(प्रभु ?)मन्त्र सरक्षेत्परितस्तु सद् ।
अरक्ष्यमाण मन्त्र हि भिनत्त्यात्मपरपरा ॥ २६२ ॥

मद प्रमाद कामस्तु सुप्ति प्रलपितानि च ।
हन्ति मन्त्र प्रविच्छि(च्छ)न्ना कामिन्यांत्रनिता(वमता)स्तथा ॥२६३॥

द्वादशानि मनु प्राह षाडशेति बृहस्पति ।
उशना विंशातिरिति मन्त्रिणा मन्त्रमण्डलम् ॥ २६४ ॥

यथा समूह(सभव)मित्यन्ये तत्प्रविश्य यथाविधि ।
मन्त्रयताहितमना कार्यसिद्धिवि(वृ)द्धये ॥ २६५ ॥

अकम्पनन(?) कार्याणि सम्प्रधाय पुन पुन ।
प्रावि(दि)शेत्स्वहिता त्वर्षी मतमेषा पृथक्पृथक ॥ २६६ ॥

महापभ्यां यथाशास्त्रं द्वष्टकमा हित सुधी ।
ययथायान्नाहडसतत्तत्माशु समाचरेत् ॥ २६७ ॥

नातीयात् काय(काल) हि कृत्वा मन्त्रविनिश्चयम् ।
अतिक्रान्त तु न भूया यथायाम प्रकल्पयेत् ॥ २६८ ॥

न कायकाल मतिमानतिक्रामेत कर्हिचित् ।
(कथ)चिदेव भवति कार्ये योग सुदुलभ । २६९ ॥

सतां मार्गेण मतिमान् काले कर्म समाचरन् ।
काल समाचरन् साधुरसत्व(कृ)त्कलमश्नुत ॥ २७० ॥

इति मन्त्रबला महीपतिमहता दृष्टभुजङ्गमानिव ।
विनयेच्चयमार्गमास्थितो वशसुयोगमसश्विना रिपून् ॥ २७१ ॥

ततश्च—

कृतमन्त्रासु मन्त्राज्ञो मन्त्रिणा मन्त्रमात्मनः ।
यानाय प्राहिणुयाद्दूत स्वामिमानिनम् ॥ २७२ ॥

प्रगल्भ स्मृतिमान् वाग्मी शस्त्र शास्त्रे च निष्ठित ।
अभ्यस्तकर्मा नृपतदूतो भवितुमर्हति ॥ २७३ ॥

स दूत शासनाद्भर्तुरुद्भूतं यथातथम् ।
स्वराष्ट्रपरराष्ट्राणामिति चानि च चिन्तयत् ॥ २७४ ॥

नाविज्ञात प(पु)र शत्रा प्रविशत्र न समाहि ।
कालमक्षित कायार्थ अनुज्ञातस्य(श्च) निष्पतत् ॥ २७५ ॥

सारवत्ता च राष्ट्र यद्दुष्कृतिं गुप्तमन्त्र च ।
छिद्र शत्रार्विजानीयात्कोशमित्रबलानि च ॥ २७६ ॥

दूतकारणमाह कामन्दक —

पृष्टन्वयमानापि न ब्रूयास्त्वस्वामिप्रकृतिव्यसनम् ।
ब्रूयात्प्रसृतया वाचा सर्व वद भवानिति ॥ २७७ ।

कुलेन नाम्ना वृत्तेन कर्मणा च महीयसा ।
कुर्यात्संस्तुतिं स्तोत्रं पक्षयोरुभयोरपि ॥ २७८ ॥

तपस्वी व्यसनापेत स्वचर्रै सह संवसेद् ॥ २७९ ॥

दूतकर्माह कामन्दकः —

तिष्ठन्वातावशिषान्न भर्तुः सदा निवदयेत् ।
रिपोः शत्रुपरिच्छदसुहृद्बन्धुविभेदनम् ॥ २८० ॥

दुर्गकोशबलज्ञानं हृग्यपक्षापसंग्रहः ।
राज्यान्तरगताना च आत्मसंस्कारणं तथा ॥ २८१ ॥

युद्धाय सारभूज्ञानं दूतकर्माणि कथ्यते ।
एतनैव चरेक(नरेन्द्र)स्तु कुर्वीतारिविकर्षणम् ।
सपक्षं च विजानीयात्परवृत्तविचेष्टितम् ॥ २८२ ॥

इति दूतकर्म । दूतान्सन्ध्यं किं कुर्यादित्याह—

विश्रम्भी नित्ययुक्तापि निगूढाकारचेष्टितः ।
प्रियाण्यनभिभाषेत यत्कार्यं कार्यमेव तत् ॥ २८३ ॥

यदा मन्येत मतिमान् हृष्टं पुष्टं स्वकं बलम् ।
परस्य विपरीतं च तदा विग्रहमाचरेत् ॥ २८४ ॥

भूमिर्मित्रं हिरण्यं च विग्रहस्य फलत्रयम् ।
यदैतन्नियतं भावि तदा विग्रहमाचरेत् ॥ २८५ ॥

आगतं विग्रहं विद्वानुपायैः प्रशमं नयेत् ।
विजयस्य ह्यनित्यत्वाद्रभसेन न संपतेत् ॥ २८६ ॥

समाक्रान्तो बलवता काङ्क्षन्भाविनीं श्रियम् ।
आश्रयेद्वैतसीं वृत्तिं न भाजङ्गीं कथंचन ॥ २८७ ॥

कुर्वन्हि वैतसीं वृत्तिं प्रा(प्रा)प्नोति विपुलां श्रियम् ।
भुजङ्गवृत्तिराप्नोति वधमेव तु केवलम् ॥ २८८ ॥

काले प्राप्ते तु मतिमानुत्तिष्ठेत्क्रूरसर्पवत् ॥ २८९ ॥

प्रसादवृत्त्या हितलोकवृत्तया प्रविश्य शत्रोर्हृदयं निरन्तरम् ।
नयाग्रहस्तेन हि कालखुच्छिते प्रसह्य कुर्वीत कचग्रहा श्रियम्॥२९०॥

कुलोद्गतं सत्यमुदारविक्रमं स्थिरं कृतज्ञं धृतिमन्तमूर्जितम् ।
अतीव दातारमुपेतवत्सलं सुहृं प्रसाद(ध) प्रवदन्ति विद्विषम्॥ २९१ ॥

असत्यता निष्ठुरताकृतज्ञता भयं प्रमादोलसता विषादिता ।
वृथाभिमानो ह्यतिदीर्घसूत्रता तथाङ्गनाक्षादि विनाशनं
स्त्रि(श्रि) य ॥ २९२ ॥

इति स्मं दोषान्वितमाशु विद्विषं त्रिशक्तियुक्तो विजिगीषया व्रजेत्
अतोन्यथा साधुजनस्य समतं करोति विद्वानुपघातमात्मनः ॥२९३॥

समन्वितो राज्यपदोभिनीषया चारेक्षणर्वीभितमण्डलाक्ष(श)यः ।
इमं नृपो विग्रहमार्गमास्थितं स्थितोयमं सम्प्रयतेत सिद्धये ॥२९४॥

इति कामन्दकात् । विग्रहकालः विग्रहप्रसङ्ग (?) ।

धीमानुत्साहसंपन्नः प्रभुशक्त्या समन्वितः ।
श्रियः स्यात्परमं पात्रमपामिव महार्णवः ॥ २९५ ॥

नलिनीवाम्बुसंपत्त्या वृध्या श्रीः परिपाल्यते ।
उत्साहव्यवसायाभ्यां विस्तारमुपनीयते ॥ २९६ ॥

लक्ष्मीरुत्साहसंपन्नाद्बुद्धिशुद्धं प्रसर्पति ।
नापैति कायाच्छायेव विस्तारं सोपगच्छति ॥ २९७ ॥

वीतव्यसनमभ्रस्त(श्रान्त) महोत्साहं महामतिम् ।
प्रविशन्ति सदा लक्ष्म्यः सरित्पतिमिवापगाः ॥ २९८ ॥

सत्वबुध्युपपन्नोपि व्यसनग्रस्तमानसः ।
स्त्रीभिः षण्ढ इव श्रीभिरलसः परिभूयते ॥ २९९ ॥

उत्थानेनैश्वर्यमत्स्वमिन्धनेनेव पावकम् ।
श्रेयो हि सततोत्थायी दुर्बलोऽपि समश्नुते ॥ ३०० ॥

व्यवसाय सदैवाश्रयेत हि क्लीबवदाचरन् ।
वसेच्छ्रिय सदोत्थायी भेरीं वृत्ति सदा प्रभु ॥ ३०१ ॥

प्रयत्नप्रेर्यमाणेन महता चित्तहस्तिना ।
रूढवैरिद्रुमात्खातमकृत्वेह कुत सुखम् ॥ ३ २ ॥

हेलाकृष्ण(ष्ट)तडि कान्तिवद्धाश्रुपरिपिञ्जर ।
श्रीमत्करिवराकारराक्षिप्त भुजै श्रिय ॥ ३०३ ॥

मूर्ध्वमूर्ध्वस्तरामिच्छुपदायाय क्षुत महान् ।
नीचा नीचैस्तरा यान्ति निपातभयशङ्कया ॥ ३०४ ॥

प्रमाणाभ्यधिकस्यापि महत्समधितिष्ठत ।
पद तु वत्त शिरसि केसरी मत्तदन्तिन ।
गतभीर्भीतिजनन वपुर्भागीव दर्शयन् ॥ ३ ५ ॥

अथ स्वामीदयय पञ्चनामात्या क्रमाण्याह—

स्वाम्यादिमित्रपर्यन्त प्राकृत मण्डल हि यत् ।
तत्र कर्म प्रवक्ष्यामि व्यसन च यथाक्रमम् ॥ ३०६ ॥

तत्र अमात्यकर्माण्याह—

आयव्ययौ दण्डनीतिरमात्यप्रतिषेधनम् ।
व्यसनस्य प्रतीकारो राज्ञि राज्याभिषेचनम्( रक्षणम् ) ॥ ३०७ ॥

इत्यमात्यस्य कर्मेद हन्ति तद्व्यसनान्वित ।
अमात्यव्यसनापतिक्रियमाणो महीपति ।
अशक्त एवोत्पतितु छिन्नपक्ष इवाण्डज ॥ ३०८ ॥

रम। यक्रमाण्याह---

हिरण्य धान्यवस्त्राणि वाहनानि तथव च ।
तथान्य द्रव्यनिचया (प्रजात सभवन्ति हि) ॥ ३०९ ।

स्थैर्यं परापजापश्च दुगसस्कार एव च ।
सतुबन्धा वणिक्कम प्रजामित्रपरिग्रह ।
धमकामार्थसिद्धिश्च काशादतत्प्रवतत ॥ ३१० ॥

अन्वीक्षण च विद्याना स्ववणाश्रमरक्षणम् ।
ग्रहण शास्त्रशस्त्राणा युद्धमागपि शिक्षणम् ॥ ३११ ॥

व्यायाम शास्त्रविज्ञान कमणा लक्षणानि च ।
गजाश्वरथपुरुष यथावत्सम्प्रवतनम् ॥ ३१२ ॥

नियुद्धकाशल माया पराचित्तप्रवदनम् ।
धूत्तनासाधुयुक्तेषु सदसद्वृत्तदशनम् ॥ ३१३ ॥

मन्त्रायायोगोनुमन्त्रित्व तद्रक्षा स्वास्थ्यमव च
उपक्षा सामदान च भदो दण्डश्च साधनम् ॥ ३१४ ।

प्रशस्ताध्यक्षसेनानीसम्यगमात्यपुराधसाम् ।
सम्यक्प्रचारविज्ञान दुष्टाना चावराधनम् ।
गतागतपरिज्ञान दतसप्रषणानि च ॥ ३१५ ॥

धमासन प्रतिष्ठान राज्यकण्टकशाधनम् ।
अकायप्रतिषेधश्च कायाणा च प्रवतनम् ॥ ३१६ ॥

अदण्डयनामदण्ड्याना दण्ड्याना चापि दण्डनम् ।
उपकायापकारित्वमिति वृत्त महीपते ॥ ३१७ ॥

एतत्सवममात्यादि राजामात्यपुर सर ।
नयत्युक्तातिमुयुक्तो व्यसनी क्षयमेव तु ॥ ३१८ ॥

तस्मिन्धमा र्थोव्यग्र(ग्र) तथा चास्वस्थचेतसि ।
सत्रमतवशषण मन्त्री सयातमहति ॥ ३१९ ॥

मन्त्रिव्यसनोपक्रमाद्राजाश्रिता व्यसना याह—

वाग्दण्डयोश्च पारुष्यमर्थदूषणमेव च ।
पानं स्त्री मृगया द्यूतं व्यसनानि महीपते ॥ ३२० ॥

मन्त्रिव्यसनम्—

आलस्यं स्तब्धता दर्पः प्रमादानुपकारिता ।
इति पूर्वोक्तमिष्टं च मन्त्रिव्यसनं स्मृतम् ॥ ३२१ ॥

राष्ट्रव्यसनम्—

अतिवृष्टिरनावृष्टिः शलभा मूषिकाश्च ।
स्वचक्रकृतदण्डश्च परचक्राणि तस्कराः ॥ ३२२ ॥

राजानीकप्रियासमा मरकव्याधिपीडनम् ।
पशूनां मरणं रोगो राष्ट्रव्यसनमुच्यते ॥ ३२३ ॥

अथ कोशव्यसनम्—

व्ययीकृतः परिक्षिप्तो भक्षितो संचितस्तथा ।
मूषितो दूरसंस्थश्च कोशव्यसनमुच्यते ॥ ३२४ ॥

अथ दुर्गव्यसनम्—

विशीर्णयन्त्रप्राकारपरिखाम्बुविशुष्कता ।
क्षीणघासेन्धनानीह दुर्गव्यसनमुच्यते ॥ ३२५ ॥

अथ बलव्यसनम्—

उपरुद्धं परिक्षिप्तममानितविमानितम् ।
आहतं व्याधितं श्रान्तं दूरयातं नवागतम् ॥ ३२६ ॥

परिक्षीणं प्रतिहतं प्रहताग्रजवं तथा ।
आशानिर्वेदभूयिष्ठमहतप्राप्तमेव च ॥ ३२७ ॥

विच्छिन्नविविधासार शून्यमूल तथैव च ।
दु पार्ष्णिग्राहम ग च बलव्यसनमुच्यते ॥ ३२८ ॥

"यसन्यधोधो व्रजति तस्मात्तत्परिवर्जयेत् ।
हुताशनो जल व्याधिदुर्भिक्ष मरकास्तथा ।
इति पञ्चविध दैव व्यसन मानुष परम् ॥ ३२९ ॥

दैव पुरुषकारेण शक्त्या च प्रशम नयेत् ।
उत्थापितमेव नीत्या च मानुष कार्यतत्त्ववित् ॥ ३३० ॥

कोशव्यसनस्य पूर्वापक्रमात् तद्व्यसन कि भवतीत्याह कामन्दक —

कोशमूलो हि राजेति प्रवाद सार्वलौकिक ।
एतत्सर्व जहातीह कोशव्यसनवान्नृप ॥ ३३१ ॥

क्षीण बल वधयति स्वनो गृह्णाति च प्रजा ।
कोशवान्पृथिवीपाल परैरप्युपजीव्यते ॥ ३३२ ॥

मित्रामित्रहिरण्याना भूमीना (च) प्रसारणम् ।
दरकायाशुकारित्व लब्धस्य परिपालनम ॥ ३३३ ॥

कोशादेतत्प्रभवति याति तद्व्यसने क्षयम ॥ ३३४ ॥

पञ्चोक्तव्यसनमध्य अमात्यव्यसन गरुतरमित्याह—

अमात्याद्या प्रकृतयो भिन्न तद्राष्ट्रमुच्यते ।
अशेषराज्यव्यसनात्पार्थिवव्यसन गरु ।
तस्मादमात्यव्यसनोप्यते (?) ॥ ३३५ ॥

चतुर्विध व्यसन पार यज्य स्वयमेव राज्य कथ्यते—

राज्ञो व्यसनिराज्यस्य व्यवसायो हि न क्षम ।
न राज्यव्यसनायेह समग्र राज्यमूर्जितम् ॥ ३३६ ॥

अथामात्यव्यसनत कोशाना दण्डामित्रयो ।
व्यसनेभ्य समुत्तीर्णो राजा य स त्रिवर्गभाक् ॥ ३३७ ॥

ता यव यसना ाह—

वाग्दण्डयाश्च पारुष्यमथन्घणमेव च।
पान व्यमननरश्च स्त्रीश्चतुर्विधमदाहृतम् ॥ ३३८ ॥

तत्र वाक्पारुष्यम्—

वाक्पारुष्य पर लाके उद्वजकमनथकम्।
न कुर्यात्प्रियया वाचा प्रकुर्याज्जगदात्मसात् ॥ ३३९ ॥

अकस्मादव य क्रोधादक्षिण बहु भाषते।
तस्मादुद्विजत लोक सस्फुलिङ्गादिवानलात् ॥ ३४० ॥

हृदये वागसिस्तीक्ष्णो मम च्छिन्द पत बहु ।
तजस्विनो न्यपयति स दीमा याति वरिताम् ॥ ३४१ ॥

नोद्वेजयज्जगद्वाचा रूक्षवाचाप्रियाभवेत्।
प्रायेण भिषक् क्षमा कृपणोपि हि मे यन्ते ॥ ३४२ ॥

अथ दण्डपारुष्यम्—

अभिद्रुसाधन सद्भि शासन दण्डमुच्यते।
तयकत्यव नयद्दण्ड युक्तदण्ड प्रशस्यत ॥ ३४३ ॥

उद्वेजयति भूतानि दण्डपारुष्यवान्नृप ।
भना पुत्रज्यमानानि द्विषता य न्ति सश्रयम् ॥ ३४४ ॥

आश्रिताश्चैव लोकन विवर्द्धि यान्ति विद्विष ।
विवृद्धाश्च विनाशाय तस्मान्नोदद्विजते प्रजा ॥ ३४५ ॥

महत्स्वप्यपराधेषु दण्ड प्राणान्तिक त्यजेत्।
कृत राज्यापहारेतु युक्तदण्ड प्रशस्यते ॥ ३४६ ॥

अथार्थदूषणमाह—

दूष्यस्य दूषणार्थं च परित्यागो महीयसः ।
अर्थस्य नीतितत्त्वज्ञैरर्थदूषणमुच्यते ॥ ३४७ ॥

तदाकस्मात्समाविष्टः कोपेनातिबलीयसा ।
नित्यमात्महिताकाङ्क्षी न कुर्यादर्थदूषणम् ॥ ३४८ ॥

अथ मृगयाव्यसनम्—

याने क्षोभो यानपातो यानाभिहरणं तथा ।
क्षुत्पिपासाश्रमायासः शीतवातोष्णपीडनम् ॥ ३४९ ॥

अभियानस्य सगत्या यानं व्यसनमुच्यते ।
दुःखं प्रतप्तसिकता कुशकण्टकभूमयः ॥ ३५० ॥

वृक्षसङ्कटतोद्दशाललताकण्टकपातनम् ।
वधबन्धपरिक्लेशः सामन्ताटविकादिभिः ॥ ३५१ ॥

स्वसैन्यैश्चास्वसैन्यैश्च परिभिन्नैर्निवारणम् ।
ऋक्षनागाथ(?)मातङ्गसिंहव्याघ्रभयानि च ॥ ३५२ ॥

वनाग्निधूमसहारा दिङ्मोहभ्रमणानि च ।
इत्यादि पृथिवीन्द्राणां मृगयाव्यसनं स्मृतम् ॥ ३५३ ॥

मृगयाया गुणा अपि सन्ति कथं व्यसनमवश्यकम् । तदुक्तम्—

जितश्रमत्वमायाम आममेदःकफक्षयः ।
चरस्थिरेषु लक्ष्येषु बाणसिद्धिरनुत्तमा ॥ ३५४ ॥

आमादयो हि जीयन्ते व्यायामेनैव दिवानिशम् ।
चरेषु(ष्व)व(च)रलक्ष्ये(षु)बाणसिद्धिश्च जायते ॥ ३५५ ॥

तथाप्यनन्ता दुष्टवास्याज्ययाह—

दोषा प्राणहरा प्रायस्तस्मात्तद्व्यसनं महत् ।
अतः सा परिहर्तव्या राज्ञा भूतिं समीप्सता ॥ ३५६ ॥

अभ्यनुज्ञामप्याह —

अथ चेन्मृगयाक्रीडा वाञ्छेत नगरान्तिके ।
कारयेन्मृगयारण्यं क्रीडार्थं(ह)तामनोरमम् ॥ ३५७ ॥

आयामपरिणाहाभ्यामर्धयोजनसम्मितम् ।
गिरेरुपान्ते नद्या वा पर्याप्तजलशाद्वलम् ॥ ३५८ ॥

अकण्टकलतागुल्मविषयादपवर्जितम् ।
पादपैः पुष्पफलदैर्विज्ञातैश्चित्तहारिभिः ॥ ३५९ ॥

स्निग्धशीतघनच्छायैर्विकाशैरुपशोभितम् ।
मृगासघातनिपुणं हस्तिनीकलभान्वितम् ॥ ३६० ॥

अगम्यं रिपुसैन्यानां मानप्रीतिविवर्धनम् ।
तद्वनं चास्य चिन्तज्ञैः क्लेशपाशसहैर्दृढैः ।
रक्षितं रक्षिभिः स्वामिभूभुजा भरिभतय ॥ ३६१ ॥

अयथकायाविराधनं प्राप्तं सङ्क्रमणक्षमम् ।
क्रीडनाय विशेद्राजा तदापि सहजैर्मतैः ॥ ३६२ ॥

यदा च प्रविशेद्राजा क्रीडनार्थं तदा बहिः ।
सन्नद्धं यत्नतस्तिष्ठेद्बलं वनवतश्चिरम् ॥ ३६३ ॥

विधिरेव समुद्दिष्टो मृगयाक्रीडने परः ।
न गच्छेदन्यथा राजा मृगयायां कदाचन ॥ ३६४ ॥

अथ सर्वव्यसनैः रहितो राजा परं श्रियं याति । तदुक्तं कामन्दके—

नानाप्रकारैर्व्यसनैर्विमुक्तं शक्तित्रयेणाप्रतिमेन युक्तः ।
परं दुरन्तव्यसनमग्न(नापदग्रं) यायान्नरेन्द्रो विजयाभिकाङ्क्षी॥३६५

प्रायेण मन्त्री व्यसनं रिपूणां यातव्यमित्थं समादिशन्ति ।
य(दा) क्षमस्तु प्रसभं निहन्तुं पराक्रमार्जितमथ्यमित्रम् ॥ ३६६ ॥

तदैव यायादहितान्हि कुर्वन्नप्यन्तराकर्षणपीडनानि ।
सपक्षसस्य विषयं परस्य यायात्प्रमृद्नन्विजयाय राजा ॥ ३६७ ॥

सस्यापघातेन परस्य वृत्तिच्छेदः स्वमे(न्या)पचयश्च नाधु ।
सुधीर्वुधासारविशुद्धमाना विशङ्करिगीं द्विषतां प्रमत्त ॥ ३६८ ॥

समं प्रदेशे विषमं च भूमनिश्च स्थलं वा समुखेन यायात् ।
अनातुरः सन्नभया हि विद्वानसन्नद्वगन्को(सन्या)
विहितान्नताय ॥ ३६९ ॥

ग्रीष्मे प्रभूतान्नजलेन यायान्निवासनाथ करिणा यथाम्बु ।
ऋतेम्भसोदग्रीष्मकृतात्प्रतापाद्भवन्ति दुष्टानि मतङ्गजानाम्॥३७०॥

स्वस्थक्रियाणामपि कुञ्जराणामूष्मा शरीरमभिजाज्वलीति ।
आयासयोगेन हि सम्प्रवृद्धः प्रसह्य हन्ति द्विरदान्प्रताप ॥ ३७१ ॥

सर्वाणि सत्त्वानि खलुष्मकाले विनाम्बुना यान्ति परामवस्थाम् ।
सुगन्धिगानस्रुतिसीकरेषु दन्ताभिघातस्फुरितापलपु ॥ ३७२ ॥

गजेषु नीलाभ्रसमप्रभेषु राज्यं निरूढं पृथिवीपतीनाम् ।
सकल्पितः सयुगदृष्टमार्गो स्वधिष्ठिता धीरतरेण पुमाम् ॥ ३७३ ॥

तुरगमाणां प्र(नि)कल्पितानामेका गजः षष्टिशतानि हन्ति ।
तस्मायतो भूरिजलस्तु पन्था यतोऽन्नपानापचिता विशङ्कः ॥ ३७४ ॥

तेनाभियायाज्जनयन्प्रताप शनैः शनैरश्रमयन्बलानि ।
न शुष्कतानामजिनप्युदारं पश्चात्प्रकोपं जनयेन्नरीणाम् ॥ ३७५ ॥

त चाप्रमत्त प्रसमीक्ष्य यायाश्च नाशयद्दृष्टमदृष्टदृष्टना ।
पश्चात्प्रकोप पुरत फल हि पश्चात्प्रकोपश्च ततो गरीयान् ॥ ३७६ ॥

पुरश्च पश्चाच्च यदा समर्थस्तदाभियायान्महते फलाय ॥ ३७७ ॥

अवश्ययानव्य रिपौ पश्चात्प्रकोपशङ्कायां कि कुर्यादित्याह—

अवश्ययातव्यतयोयात सन्पश्चात्प्रकोपाहितयानशङ्क ।
सेनापतिं वाप्यथवा कुमार बलैकदेशेन पुरो निदध्यात् ॥ ३७८ ॥

अभ्यन्तराद्बाह्यकृताच्च दोषादभ्यन्तरस्तत्र तयोगरीयान् ।
आदाय गच्छेत बहि प्रचारास्तान्मन्त्रिभि सम्यगुपावदन्ति ॥ ३७९ ॥

सामादिभि सशमयन्प्रकोप परस्परावग्रहमर्दनैश्च ॥ ३८० ॥

एव प्रस्थाय कि कुर्यादित्याह—

यायाद्वैरिपुराभ्याश भूभागे साधुसमते ।
स्कन्धावारनिवेशज्ञ स्कन्धावार निवेशयेत् ॥ ३८१ ॥

चतुरस्रं चतुर्द्वार नातिविस्तारमङ्कटम् ।
साट्टप्रतोलीप्राकार महाखातिसमावृतम् ॥ ३८२ ॥

शृङ्गाटमथचन्द्रं च मण्डल दीर्घमथ च ।
भूमिप्रदेशसामर्थ्यादाकारमुपकल्पयेत् ॥ ३८३ ॥

विभक्तैश्च विविक्तैश्च पार्श्वैरन्वितमायत ।
गुप्त पक्षपुटाकार महामात्रसमावृतम् ॥ ३८४ ॥

तस्य मध्ये मनोह्लादि महाम्भोलवणाहृत ।
अन्त कोशबलोपेत कारयद्राजमन्दिरम् ॥ ३८५ ॥

मौलीभृतश्रेणिसुहृद्द्विषदाटविक बलम् ।
राजहर्म्य समावृत्य क्रमेण विनिवेशयेत् ॥ ३८६ ॥

अन्तश्चाशाणितकूराकुन्धकाटुष्टकमण ।
पर्याप्तवेतनामाप्तान्मण्डले विनिवेशयेत् ॥ ३८७ ॥

हस्तिनो बध्यमानास्तु तुरगाश्च मनोजवा ।
गृहोपकण्ठे नृपतेवेश्मसु स्वामरक्षिता ॥ ३८८ ॥

यामवृत्त्या सुसनद्ध रात्रिंदिवमुदाहृतम् ।
अन्तर्वंशिकसैन्य च तिष्ठेद्राराग्निगुप्तये ॥ ३८९ ॥

युद्धयोग्यो महादन्ती सनद्ध साध्ववस्थित ।
तिष्ठेन्नरपतेर्द्वारि वेगवांश्च तुरगम ॥ ३९० ॥

सैन्यकदेशसनद्ध सेनापतिपुर सर ।
प्रयत्नवान्परिपते मण्डलेन बहिर्निशि ॥ ३९१ ॥

परर्म यविनाशार्थ सवा भूमि विनाशयेत् ॥ ३९२ ॥

काचित्कण्टकशाखाभि काचित्कीलैरधोमुखै ।
भ(उ)पर्यत्परिता भूमि प्रच्छन्न प्रदरैरपि ॥ ३९३ ॥

इति यानानरूपण साङ्गना निरूपनम् ।

अलब्धमीहेद्धर्मेण लब्ध यत्नेन पालयेत् ।
पालित वर्धयेन्नीत्या वृद्ध पात्रेषु निक्षिपेत् ॥ ३९४ ॥

नात परतरो धर्मो नृपाणां यद्रणोर्जितम् ।
विप्रेभ्यो दीयते द्रव्य प्रजाभ्यश्चाभय सदा ॥ ३९५ ॥

तवाह वादिन क्लीब निर्हेतिं परसङ्गतम् ।
न हन्याद्विनिवृत्त च युद्धप्रेक्षणक तथा ॥ ३९६ ॥

ब्राम्हणेषु क्षमी स्निग्धेष्वजिह्म क्रोधनोरिषु ।
स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता ॥ ३९७ ॥

पुण्यात्षड्भागमादत्ते न्यायेन परिपालयेत् ।
सर्वदानाधिकं यस्मात्प्रजानां परिपालनम् ॥ ३९८ ॥

शत्रुतस्करदुर्वृत्तमहासाहसिकादिभिः ।
पीड्यमाना प्रजा रक्षेत्कायस्थैश्च विशेषतः ॥ ३९९ ॥

अरक्ष्यमाणा कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः ।
तस्मात्तु नृपतेरर्धं यस्माद्गृह्णात्यसौ करान् ॥ ४०० ॥

ये राष्ट्रेऽधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ।
साधून्संमानयेद्राजा विपरीतांश्च घातयेत् ॥ ४०१ ॥

उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत् ।
स दानमानसत्कारैः श्रोत्रियान्वासयेत्सदा ॥ ४०२ ॥

अन्यायेन नृपो राष्ट्रात् स्वकोशं योऽभिवर्धयेत् ।
सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः ॥ ४०३ ॥

प्रजापीडनसंतापात्समुद्भूतो हुताशनः ।
राज्ञः श्रियं कुलं प्राणानदग्ध्वा न निवर्तते ॥ ४०४ ॥

य एव नृपतेर्धर्मः स्वराष्ट्रपरिपालने ।
तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन् ॥ ४०५ ॥

किंतु यस्मिन्य आचारो व्यवहारः कुलस्थितिः ।
तथैव परिपाल्योऽसौ यथावशमुपागतः ॥ ४०६ ॥

मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम् ।
कुर्याद्यथास्य न विदुः कर्मणामाफलोदयात् ॥ ४०७॥

दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ।
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥ ४०८ ॥

